Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 17.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAṂHITÁ

OF THE

## KṚISHṆA YAJUR-VEDA

WITH THE

COMMENTARY OF BHAṬṬABHA'SKARAMIS'RA.

### Vol. IX.

(Kanda V-Prasnas 5 to 7)



EDITED BY

A. MAHA'DEVA S'A'STRI, B.A.,

*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,

*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1898.

## EDITORIAL NOTE.

The portion comprised in this Volume has been edited from a collation of the manuscript copies found in the Sarasvatî Bhandâra of H. H. the Mahârâja's Palace, Mysore, in the Sarasvatî-Mahal of the Tanjore Palace, and in the Sanskrit Library of the Sringeri Mutt at Kûdli.

A. M. S.

# विषयसूचिका.

## पञ्चमकाण्डे पञ्चमः प्रपाठकः.



## षष्ठः प्रपाठकः.

## सप्तमः प्रपाठकः.



---

हरिः ॐम्.

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

## पञ्चमकाण्डः.

### पञ्चमः प्रश्नः.

यदेकेन सꣳस्थापयति यज्ञस्य स-
न्तत्या अविच्छेदायैन्द्राः पशवो ये

[1]यत् । एकेन । सꣳस्थापयतीति सं-स्थापयं-
ति । यज्ञस्य । सन्तत्या इति सं-तत्यै । अविच्छे-
दायेत्यवि-छेदाय । ऐन्द्राः । पशवः । ये । मुष्क-

[1]अतः परमग्निकाण्डमेव अग्नचार्षेयम् । एवं चतुर्थकाण्ड आ-
म्नातानां मन्त्राणां परिसमाप्त्या इदानीं अग्निप्रयोगविहितान्
कांश्चिद्धर्मविशेषान्वक्तुं द्वितीयं काण्डमारभ्यते । तत्र यदुक्तं
'अग्निभ्यः पशूनालभते'* इत्यारभ्य 'प्राजापत्येन संस्थाप-
यति'* इत्यन्तेन पक्षद्वयमग्निभ्यः पशूनालभ्य तान् पर्यग्निकृतानु-
त्सृज्य प्राजापत्येनैव संस्थापयेत् सर्वेषां संस्थापयेदिति, तत्र वि-

*सं. ५-१-८.

मुंष्करा यदैन्द्रास्सन्तोऽग्निभ्यं आ-
लभ्यन्तें देवताभ्यस्समदं दधात्या-
ग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कु-
र्याद्यदांग्नेयीस्तेनांग्नेया यत्त्रिष्टुभस्ते-

राः । यत् । ऐन्द्राः । सन्तः । अग्निभ्य इत्यग्नि-
भ्यः । आलभ्यन्त इत्यां-लभ्यन्तें । देवताभ्यः ।
समदामितिं स-मदंम् । दधाति । [2]आग्नेयीः । त्रि-
ष्टुभंः । याज्यानुवाक्यां इतिं याज्या-अनुवाक्याः।
कुर्यात् । यत् । आग्नेयीः । तेनं । आग्नेयाः । यत्।
त्रिष्टुभंः । तेनं । ऐन्द्राः । समृंद्ध्या इति सं-ऋ-

---

शेषविवक्षया प्रथमः पक्षोऽनूद्यते—यदेकेनेत्यादि ॥ यत्प्राजाप-त्येनैकेन पशुना संस्थापयति यज्ञस्य सन्तत्यै साकल्येन निवृत्त्यर्थं भवति । तच्चाविच्छेदार्थं मध्ये विच्छेदो माभूदिति । पर्यग्नि-कृतानां उत्सर्गात् विच्छेदस्स्यात् प्राजापत्येन संस्थापनया तत्प-रिह्रियत इति । अथ द्वितीये पक्षे विशेषमाह—ऐन्द्राः खल्वे-ते पशवः ये मुष्कराः मुष्कवन्तः अनुत्पातितवृषणाः 'ऊषसुषि-मुष्कमधो रः' इत्यादिना रः । ऐन्द्रास्सन्तो ये अग्निभ्यः आलभ्य-न्ते संज्ञप्यन्ते च ते सर्वे देवताभ्यः समदं कलहं दधाति उत्पा-दयति । इन्द्रस्याग्न्यादीनां च समानं माद्यन्त्यस्यामिति सम-त्कलहः । क्विप्, 'समानस्य छन्दसि' इति सभावः ॥

[2]आग्नेयीरित्यादि ॥ गतम् ॥

नैन्द्रास्समृद्ध्यै न देवताभ्यस्समर्दं दधाति वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ् वायुः ॥१॥ वाति तद्रियङ्ङग्निर्दहति स्वमेव तत्तेजोऽन्वे-

ऋद्ध्यै । न । देवताभ्यः । समर्दमिति स–मर्दम् । दधाति । [3]वायवे । नियुत्वत इति नि–युत्वते । तूपरम् । एति । लभते । तेजः । अग्नेः । वायुः । तेजसे । एषः । एति । लभ्यते । तस्मात् । यद्रियङ् । वायुः ॥ १ ॥ वाति । तद्रियङ् । अग्निः । दहति । स्वम् । एव । तत् । तेजः । अन्विति ।

---

[3]अधुना तृतीयमपि पक्षं समर्थयति—वायवे नियुत्वत इति॥ सर्वेषामेतेषां स्थाने एक एव वायव्यः पशुस्तूपर आलभ्यते । तूपरः शृङ्गहीनः । तेज इति । तद्धेतुत्वात्ताच्छब्द्यम् । वायुना अभिध्यायमानो अग्निस्तेजस्वीभवति । तस्माद्यद्रियङ् यद्दिगभिमुखो वाति वायुः अग्निरपि तद्रियङ् तद्दिगभिमुखो दहति गच्छतीति यावत् । यदञ्चति तदञ्चतीति ऋत्विगादिना क्विन्, 'विष्वग्देवयोश्च' इत्यद्र्यादेशः । अद्रिसक्रियो रन्तोदात्तत्वनिपातः कृत्स्वरानिवृत्त्यर्थम्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । आत्मनस्तेजोहेतुत्वमनुगच्छति वायुः ॥

ति यन्न नियुत्वंते स्यादुन्माद्येद्य-
जंमानो नियुत्वंते भवति यजंमान-
स्यानुंन्मादाय वायुमतीं श्वेतवंती
याज्यानुवाक्यें भवतस्सतेजस्त्वायं
हिरण्यगर्भस्समंवर्तताग्र इत्यांघार-

एति । [4]यत् । न । नियुत्वंत इतिं नि–युत्वंते । स्यात् । उदितिं । माद्येत् । यजंमानः । नियुत्वंत इतिं नि–युत्वंते । भवति । यजंमानस्य । अनुंन्मादायेत्यनुंत्–मादाय । [5]वायुमती इतिं वायु–मतीं । श्वेतवंती इतिं श्वेत–वती । याज्यानुवाक्यें इतिं याज्या–अनुवाक्यें । भवतः । सतेजस्त्वायेति सतेजः–त्वायं । [6]हिरण्यगर्भ इतिं हिरण्य–गर्भः । समितिं । अवर्तत । अग्रें । इतिं । आघारमित्यां–घारम् । एतिं । घारयति । प्रजापंतिरितिं

[4]यदिति ॥ केवलवायव्यत्वे यजमान उन्माद्येत् ॥

[5]वायुमतीति ॥ 'पीवोन्नान्'* इत्येवमाद्ये नियुत्वत्यौ श्वेतवत्यौ 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । सतेजस्त्वायेति । स्वतोस्य तेजस्त्वात् ॥

[6]हिरण्यगर्भ इति ॥ स्रुचैव विधीयते । प्रजापतेरिति । एवं हि प्रजापतेरनुरूपत्वं भवतीति ।

*ब्रा. २-८-१.

मा धारयति प्रजापतिर्वै हिरण्यग-
र्भः प्रजापतेरनुरूपत्वाय सर्वाणि वा
एष रूपाणि पशूनां प्रत्या लभ्यते
यच्छ्मश्रुणस्तत् ॥२॥ पुरुषाणाꣳ रू-
पं यत्तूपरस्तदश्वानां यदन्यतोदन्त-
द्गवां यदव्या इव शफास्तदवीनां य-

प्रजा–पतिः । वै । हिरण्यगर्भ इति हिरण्य–गर्भः । प्रजापतेरिति प्रजा–पतेः । अनुरूपत्वायेत्यनुरूप–त्वाय । [7]सर्वाणि । वै । एषः । रूपाणि । पशूनाम् । प्रति । एति । लभ्यते । यत् । श्मश्रुणः । तत् ॥ २ ॥ पुरुषाणाम् । रूपम् । यत् । तूपरः । तत् । अश्वानाम् । यत् । अन्यतोदन्नित्यन्यतः–दन् । तत् । गवाम् । यत् । अव्याः । इव । शफाः । तत् । अवीनाम् । यत् । अजः । तत् । अजा-

---

[7]सर्वाणीति ॥ पशूनां सर्वाणि रूपाणि प्रत्येषः य आलभ्यते प्राजापत्याम्नातमेवे*त्यर्थः । कथमित्याह—यदित्यादि । श्मश्रुणत्वात् पुरुषाणां रूपं प्रत्यालभते । तूपरत्वादश्वानाम् । अन्यतोदत्त्वात् गवाम् । 'छन्दसि च' इति दन्नावः । अवितुल्यशफत्वात् अवीनाम् । अजत्वात् अजानां सर्वेषाम् ॥

---

*आलभ्यते प्रत्याम्नातमेव.

दजस्तदजानां वायुर्वै पशूनां प्रियं धाम यद्वायव्यो भवत्येतमेवैनमभि संजानानाः पशव उप तिष्ठन्ते वायव्यः कार्या३ः प्राजापत्या३ इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यं कुर्याद्वायोः ॥ ३ ॥ इयाद्य-

नाम । [8]वायुः । वै । पशूनाम् । प्रियम् । धाम । यत् । वायव्यः । भवति । एतम् । एव । एनम् । अभीति । सञ्जानाना इति सं-जानानाः । पशवः । उपेति । तिष्ठन्ते । [9]वायव्यः । कार्या३ः । प्राजापत्या३ इति प्राजा-पत्या३ः । इति । आहुः । यत् । वायव्यम् । कुर्यात् । प्रजापतेरिति प्रजा-पतेः । इयात् । यत् । प्राजापत्यमिति प्राजा-पत्यम् । कुर्यात् । वायोः ॥ ३ ॥ इयात् । यत् । वायव्यः ।

---

[8]वायुर्वा इति ॥ वृष्ट्यादिद्वारेणोत्पत्तिहेतुत्वात् पशूनां प्रियं स्थानम् । तस्माद्वायव्यत्वे एवमेकप्रियस्थानात्मकं वायुमेवाभिसञ्जानानाः प्रत्यभिजानन्तः पशव एवैनं पशव उपतिष्ठन्ते अतश्च सर्वपशुप्रत्याम्नातमितीदं पशोस्स्तुतिः ॥

[9]वायव्यार्थे प्राजापत्यस्य पशुपुरोडाशस्य विधानार्थं पशोर्विचारः । 'विचार्यमाणानाम्' इति प्लुतः । यदित्यादि ॥ इयात् अपगच्छेत् सम्बन्धोस्य न स्यात् तत्र पशोर्वायव्यत्वात् पशुपुरोडा-

वायव्यः पशुर्भवति तेन वायोर्नैति यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद्द्वादशकपालस्तेन वैश्वानरान्नैत्याग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणोऽग्निस्सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चारभतेऽग्निरवमो देवतानां वि-

पशुः । भवति । तेन । वायोः । न । एति । यत् । प्राजापत्य इति प्राजा–पत्यः । पुरोडाशः । भवति । तेन । प्रजापतेरिति प्रजा–पतेः । न । एति। यत् । द्वादशकपाल इति द्वादश–कपालः । तेन । वैश्वानरात् । न । एति । [10]आग्नावैष्णवमित्याग्ना–वैष्णवम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपति । दीक्षिष्यमाणः । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताः । च । एव । यज्ञम् । च । एति । रभते । अग्निः । अवमः । दे-

शस्य च प्राजापत्यत्वात् दोषद्वयं परिहृतम् । इदं चापरमुच्यते तस्य पशुपुरोडाशस्य द्वादशकपालत्वात् वैश्वानरान्नापगमः ॥

[10]शाखान्तरे यद्वैश्वानरस्य पुरोडाशं तदप्येतेनोपसंहृतमिति दर्शयति—आग्नावैष्णवमित्यादि ॥ दीक्षणीयायां 'तस्मा एतमाग्नावैष्णवं'* इति प्रकृतौ विहितस्यानुवादोऽयं विशेषविधानार्थम् । अ-

*ब्रा. १-५-९.

ष्णुः पर॒मो यदा॑ग्नावैष्ण॒वमेका॑दश- कपालं॒ निर्वप॑ति दे॒वता॑ः ॥ ४ ॥ ए॒- वोभ॒यत॑ः परि॒गृह्य॒ यज॑मा॒नोऽव॑ रु- न्धे पुरो॒डाशे॑न॒ वै दे॒वा अ॒मुष्मि॑- न्लो॒क आ॑र्ध्नुवञ्च॒रुणाऽस्मिन्॒ यः का॒- मये॑ता॒मुष्मि॑न्लो॒क ऋ॑ध्नु॒या॒मिति॒ स पु॑रो॒डाशं॒ कुर्वी॑ता॒मुष्मि॑न्ने॒व लो॒क

वता॑नाम् । विष्णु॑ः । प॒र॒मः । यत् । आ॒ग्ना॒वै॒ष्ण॒- वमित्या॑ग्ना-वै॒ष्ण॒वम् । एका॑दशकपा॒ल॒मित्येका॑द- श-क॒पा॒ल॒म् । नि॒र्वप॒तीति॒ निः-वप॑ति । दे॒वता॑ः । ॥ ४ ॥ ए॒व । उ॒भ॒यत॑ः । प॒रि॒गृह्येति॒ परि॑-गृह्य॑ । यज॑मानः । अवेति॑ । रु॒न्धे । [11]पु॒रो॒डाशे॑न । वै । दे॒वाः । अ॒मु॒ष्मिन्न् । लो॒के । आ॒र्ध्नु॒व॒न्न् । च॒रुणा॑ । अ॒स्मिन्न् । यः । का॒मये॑त । अ॒मु॒ष्मिन्न् । लो॒के । ऋ॒ध्नु॒या॒म् । इति॑ । सः । पु॒रो॒डाश॑म् । कु॒र्वी॒त॒ । अ॒-

ग्निस्सर्वा इत्यादि । सर्वदेवतात्वेन अग्नेस्स्तुतिः, यज्ञत्वेन विष्णोः । अवमः पश्चिमः । परम उत्कृष्टः । यज्ञभुजां देवानां सीमानावेतौ आभ्यां देवानुभयतः परिगृह्य अवरुन्धे लभते यजमान एतान् एतत्साध्यं वा फलम् ॥

[11]पुरोडाशेनेति ॥ विशेषविधिः । अमुष्मिन् लोके ऋद्धिकामस्य पुरोडाशः । अस्मिन्लोके ऋद्धिकामस्य चरुः । गतमन्यत् ॥

ऋध्नोति यदष्टाकपालस्तेनाग्नेयो य-
त्त्रिकपालस्तेन वैष्णवस्समृद्ध्यै यः
कामयेतास्मिन्लोक ऋध्नुयामिति स
चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुला-
स्तस्मात् ॥५॥ चरुः कार्योऽस्मिन्नेव
लोक ऋध्नोत्यादित्यो भवतीयं वा
अदितिरस्यामेव प्रति तिष्ठत्यथो अ-

मुष्मिन्न् । एव । लोके । ऋध्नोति । यत् । अष्टाकपा-
ल इत्यष्टा–कपालः । तेन । आग्नेयः । यत् । त्रिक-
पाल इति त्रि–कपालः । तेन । वैष्णवः । समृद्ध्या
इति सं–ऋद्ध्यै । यः । कामयेत । अस्मिन्न् । लो-
के । ऋध्नुयाम् । इति । सः । चरुम् । कुर्वीत । अग्नेः ।
घृतम् । विष्णोः । तण्डुलाः । तस्मात् ॥ ५ ॥ चरुः ।
कार्यः । अस्मिन्न् । एव । लोके । ऋध्नोति ।
[12]आदित्यः । भवति । इयम् । वै । अदितिः । अ-
स्याम् । एव । प्रतीति । तिष्ठति । अथो इति ।
अस्याम् । एव । अधीति । यज्ञम् । तनुते ।

---

[12]आदित्य इति ॥ कः आन(?) । अथो अपि च अस्यां पृथिव्यां अधियज्ञं तनुते आदित्यं सर्वा पृथिवी देवी यजमानमिति ॥

स्यामेवाधि यज्ञं तंनुते यो वै संव-
थ्सरमुख्यमभृत्वाऽग्निं चिंनुते यथा
सामि गर्भोऽवपद्यंते तादृगेव तदा-
र्तिमार्च्छेद्वैश्वानरं द्वादंशकपालं पुर-
स्तान्निर्वंपेत्संवत्सरो वा अग्निर्वैश्वा-
नरो यथा संवत्सरमाप्त्वा ॥६॥ काल
आगंते विजायंत एवमेव संवत्स-

[13]यः। वै। संवत्सरमितिं सं-वत्सरम्। उख्यंम्। अभृ-
त्वा। अग्निम्। चिनुते। यथा। सामि। गर्भः।
अवपद्यंत इत्यंव-पद्यंते। तादृक्। एव। तत्।
आर्तिम्। एतिं। ऋच्छेत्। वैश्वानरम्। द्वादंश-
कपालमिति द्वादंश-कपालम्। पुरस्तात्। निरि-
तिं। वपेत्। संवत्सर इतिं सं-वत्सरः। वै। अ-
ग्निः। वैश्वानरः। यथा। संवत्सरमितिं सं-वत्स-
रम्। आप्त्वा ॥ ६ ॥ काले। आगंत इत्या-गते।
विजायंत इतिं वि-जायंते। एवम्। एव। संव-
त्सरमितिं सं-वत्सरम्। आप्त्वा। काले। आगंत

[13]यो वा इत्यादि ॥ संवत्सरमुख्यस्याभरणे वैश्वानराग्निविधिः। सामीति। गर्भकालस्यैकादशापगमे आर्तिमार्छेदिति। यजमानः वैश्वानरस्य संवत्सरत्वात्। संवत्सरकार्यलाभः। ततः काले च यजनात् यजमानस्य आर्त्यभावः॥

रमाप्ना काल आगतेऽग्निं चिनुते नार्तिमार्छत्येषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्यं तनुवमवरुन्धे त्रीण्येतानि हवीꣳषि भवन्ति त्रयं इमे लोका एषां लोकानाꣳ रोहाय ॥ ७ ॥

इत्या–गते । अग्निम् । चिनुते । न । आर्तिम् । एर्ति । ऋच्छति । [14]एषा । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियाम् । एव । अस्य । तनुवम् । अवेति । रुन्धे । [15]त्रीणि । एतानि । हवीꣳषि । भवन्ति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । रोहाय ॥ ७ ॥

यद्रियङ् वायुश्श्मश्रुणस्तद्वायोर्निर्वपति देवतास्तस्मादाप्नाऽष्टात्रिꣳशच्च ॥ १ ॥

---

[14]एषेति ॥ गतम् ॥

[15]त्रीणीति ॥ वैश्वानरान्तानि नित्यानीति मन्यन्ते । विकल्पवचनं विकृत्यर्थं स्यादिति ॥

इति पञ्चमे पञ्चमे प्रथमोनुवाकः.

प्रजापतिः प्रजास्सृष्ट्वा प्रेणाऽनु प्रावि-
शत्ताभ्यः पुनस्संभवितुं नाशक्नो-
थ्सोऽब्रवीदृध्नवदिथ्स यो मेऽतः पुन-
स्संचिनवदिति तं देवास्समचिन्व-
न्ततो वै त आर्ध्नुवन् यथ्समचिन्व-
न्तच्चित्यस्य चित्यत्वं य एवं विद्वा-

[1]प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । सृष्ट्वा । प्रेणा । अनु । प्रेति । अविशत् । ताभ्यः । पुनः । सम्भवितुमिति सं-भवितुम् । न । अशक्नोत् । सः । अब्रवीत् । ऋध्नवत् । इत् । सः । यः । मा । इतः । पुनः । संचिनवदिति सं-चिनवत् । इति । तम् । देवाः । समिति । अचिन्वन् । ततः । वै । ते । आर्ध्नुवन् । यत् । समचिन्वन्निति सं-अचिन्वन् । तत् । चित्यस्य । चित्यत्वमिति चित्य-त्वम् । यः । एवम् । विद्वान् । अग्निम् ।

---

[1]प्रजापतिरित्यादि ॥ विशेषस्तुतिः । प्रेम्णा सृष्टा अनुप्राविशन् । छान्दसो मकारस्य लोपः, उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वम् । प्रजानां पाता अग्निः प्रजापतिः । प्रजापतिरेव हि वैश्वानरभावं प्रतिपन्नः ता अनुप्रविष्टः ताभ्यः पुनः प्रजाभ्यः पुनः सम्भवितुमुत्पत्तुं नाशक्नोत् । विभक्तात्मैवा-

नाग्निं चिनुत ऋध्नोत्येव कस्मै कम-
ग्निश्चीयत इत्याहुरग्निवान् ॥ ८ ॥
असानीति वा अग्निश्चीयतेऽग्निवानेव
भवति कस्मै कमग्निश्चीयत इत्याहु-
र्देवा मा वेदन्निति वा अग्निश्चीयते
विदुरेनं देवाः कस्मै कमग्निश्चीयत

चिनुते । ऋध्नोति । एव । [2]कस्मै । कम् । अग्निः ।
चीयते । इति । आहुः । अग्निवानित्यग्नि—वान् ॥
८ ॥ असानि । इति । वै । अग्निः । चीयते । अ-
ग्निवानित्यग्नि—वान् । एव । भवति । कस्मै । कम् ।
अग्निः । चीयते । इति । आहुः । देवाः । मा ।
वेदन् । इति । वै । अग्निः । चीयते । विदुः । ए-
नम् । देवाः । कस्मै । कम् । अग्निः । चीयते । इति । आ-

---

स्थितः । अथ तादृशस्सोऽब्रवीत् ऋध्नुयादेव सः प्रजासु मां विभक्तात्मानमवस्थितमादाय पुनस्संचिनवत् सङ्गतमेकत्र चिनुयादिति । उभयत्रापि लेख्याडागमः । अथ देवाश्च तथा कृत्वा गताः तस्मात्संहतचयनात् चित्यत्वं अग्नेः । 'चित्याग्निचित्ये च' इति निपात्यते । तस्मादेवं विदित्वा चिन्वानः ऋध्नोत्येव ॥

[2]कस्मा इत्यादि ॥ ब्रह्मवादिन आहुः । कमिति निपातः लुप्तचतुर्थी कः । कमेर्वा व्यत्ययेन कर्मणि विच् । कस्मै कामाया-

इत्याहुर्गृह्यसानीति वा अग्निश्चीयते गृह्येव भवति कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति वा अग्निः ॥ १ ॥ चीयते पशुमानेव भवति कस्मै कमग्निश्चीयत इत्याहुस्सप्त मा पुरुषा उप जीवानिति वा अग्निश्चीयते त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आ-

हुः । गृही । असानि । इति । वै । अग्निः । चीयते । गृही । एव । भवति । कस्मै । कम् । अग्निः चीयते । इति । आहुः। पशुमानिति पशु-मान् । असानि । इति । वै । अग्निः ॥ १ ॥ चीयते । पशुमानिति पशु-मान् । एव । भवति । कस्मै कम् । अग्निः । चीयते । इति । आहुः । [3]सप्त । मा । पुरुषाः । उपेति । जीवान् । इति । वै । अग्निः । चीयते । त्रयः । प्राञ्चः । त्रयः । प्रत्यञ्चः । आत्मा

ग्निश्चीयत इत्यर्थः । अग्निवानिति । जाठरेण तद्वान् । भूम्नि मतुप् । 'छन्दसीरः' इति मत्वम् । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् ॥

[3]सप्तेति ॥ सप्त पुरुषा मा उपजीवन्तीति लेट्याडागमः । प्राञ्चः त्रयः पित्रादयोऽतीताः त्रयः प्रत्यञ्चः पुत्रादयो भविष्यन्तः । आ-

त्मा संप्तम एतावंन्त एवैनंमृमुष्मिं-
न्लोक उपं जीवन्ति प्रजापंतिर॒ग्नि-
मंचिकीषत॒ तं पृंथि॒व्यंब्रवी॒न्न मय्य॒-
ग्निं चेष्य॒सेऽति मा धक्ष्यति॒ सा त्वांऽ-
तिद॒ह्यमांना॒ वि धंविष्ये ॥ १० ॥
स पापीयान्भविष्य॒सीति॒ सोंब्रवी॒-
त्तथा॒ वा अ॒हं कंरिष्यामि॒ यथां त्वा॒

स॒प्तमः । ए॒तावंन्तः । ए॒व । ए॒नम् । अ॒मुष्मिन्न् ।
लो॒के । उपेति॑ । जी॒व॒न्ति॒ । [4]प्र॒जाप॑ति॒रिति॑ प्र॒जा–
प॒तिः । अ॒ग्निम् । अ॒चि॒की॒ष॒त॒ । तम् । पृ॒थि॒वी । अ॒-
ब्र॒वी॒त् । न । मयि॑ । अ॒ग्निम् । चे॒ष्य॒से॒ । अतीति॑ ।
मा॒ । ध॒क्ष्य॒ति॒ । सा । त्वा॒ । अ॒ति॒द॒ह्य॒मा॒नेत्य॑ति–द॒-
ह्यमा॑ना । वीति॑ । ध॒वि॒ष्ये॒ ॥ १० ॥ सः । पापी॑यान् ।
भ॒वि॒ष्य॒सि॒ । इति॑ । सः । अ॒ब्र॒वी॒त् । तथा॑ । वै । अ॒-
ह॒म् । क॒रि॒ष्या॒मि॒ । यथा॑ । त्वा॒ । न । अ॒ति॒ध॒क्ष्यती-

त्मा प्रकृष्टपाण्यादिकं शरीरम् । औपचारिकमस्य पुरुषत्वम् । व-
क्तारश्च भवन्ति—विरूपः पुरुष इति । एतावन्त इति । सप्ता-
प्येते एनमग्निचितं अमुष्मिन् लोके भोगभूमौ उपजीवन्ति उपगच्छन्ति ॥

[4]प्रजापातिराग्निमित्यादि ॥ 'प्रजापतिस्त्वा'* इत्यस्य स्तुतिः । आचि-

*सं. ४-२-९.

नाति धक्ष्यतीति स इमामभ्यमृश-
त्प्रजापतिस्त्वा सादयतु तया देव-
तयाऽङ्गिरस्वद्ध्रुवा सीदेतीमामेवेष्टकां
कृत्वोपाधत्तानतिदाहाय यत्प्रत्यग्निं
चिन्वीत तदभि मृशेत्प्रजापतिस्त्वा
सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा
सीद ॥ ११ ॥ इतीमामेवेष्टकां कृ-

त्यति-धक्ष्यति । इति । सः । इमाम् । अभीति । अ
मृशत् । प्रजापतिरिति प्रजा-पतिः । त्वा । सादय
तु । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद
इति । इमाम् । एव । इष्टकाम् । कृत्वा । उपेति
अधत्त । अनतिदाहायेत्यनति-दाहाय । [5]यत् । प्र
तीति । अग्निम् । चिन्वीत । तत् । अभीति । मृ
शेत् । प्रजापतिरिति प्रजा-पतिः । त्वा । सादय
तु । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद
॥ ११ ॥ इति । इमाम् । एव । इष्टकाम् । कृत्वा

कीपत चेतुमैच्छत् । 'विभाषाञ्चेः' इति कुत्वम् । पृथिव्यब्रवी
मय्यग्निं न चेष्यसे अकार्यं तत्तव । अथ कारणं चाह—पृथि
वीमेवेष्टकां कृत्वोपाधत्त । तच्चानतिदाहायाभवत् ॥

[5]यदित्यादि ॥ यत्फलं प्रत्यग्निं चिन्वीत तत्फलं साधयितुम्

त्वोपं धत्तेऽनंतिदाहाय प्रजापंतिरका-
मयत प्र जांयेयेति स एतमुख्यंमप-
श्यत्तꣳ संवथ्सरमंबिभस्ततो वै स
प्राजांयत तस्मांथ्संवथ्सरं भार्यैः प्रैव
जांयते तं वसंवोऽब्रुवन्प्र त्वमंजनि-
ष्ठा वयं प्र जांयामहा इति तं वसु-

उपेतिं । धत्ते । अनंतिदाहायेत्यनंति-दाहाय । [6]प्र-
जापंतिरितिं प्रजा-पतिः । अकामयत । प्रेतिं ।
जायेय । इतिं । सः । एतम् । उख्यंम् । अपश्यत् ।
तम् । संवत्सरमितिं सं-वत्सरम् । अबिभः । त-
तः । वै । सः । प्रेतिं । अजायत । तस्मांत् । सं-
वत्सरमितिं सं-वत्सरम् । भार्यैः । प्रेतिं । एव ।
जायते । तम् । वसंवः । अब्रुवन् । प्रेतिं । त्वम् ।
अजनिष्ठाः । वयम् । प्रेतिं । जायामहै । इतिं ।

---

यद्वा—कर्म निर्वर्तयितुं तत्राभिमृशेत् इष्टकाम् । 'सुपां सुलुक्' इति सप्तम्या लुक् । व्याख्यातो* मन्त्रः । इमामित्यादि । गतम् ॥

[6]प्रजापतिरकामयतेत्यादिरुख्यस्य संवत्सरविधिः । तमिति । तं यान् प्रागजनिष्ठाः ते वयं प्रजायामहै तत्तस्मात् उख्यमस्मभ्यं प्रयच्छेति प्रजाकामाः वसवोऽब्रुवन् । प्रजापतिरथ उख्यं तेभ्यः

---

*सं. ४-२-९.

भ्यः प्रायच्छत्तं त्रीण्यहान्यबिभरुस्ते-
न ॥ १२ ॥ त्रीणि च शतान्यसृज-
न्त त्रयस्त्रिंशतं च तस्मात्त्र्यहं
भार्यः प्रैव जायते तान्रुद्रा अब्रुवन्प्र
यूयमजनिढ्वं वयं प्र जायामहा इ-
ति तꣳ रुद्रेभ्यः प्रायच्छन्तꣳ षडहा-

तम् । वसुभ्य इति वसु-भ्यः । प्रेति । अयच्छत् ।
तम् । त्रीणि । अहानि । अबिभरुः । तेन ॥ १२ ॥
त्रीणि । च । शतानि । असृजन्त । त्रयस्त्रिꣳशतमि-
ति त्रयः-त्रिꣳशतम् । च । तस्मात् । त्र्यहमिति
त्रि-अहम् । भार्यः । प्रेति । एव । जायते । [7]तान् ।
रुद्राः । अब्रुवन् । प्रेति । यूयम् । अजनिढ्वम् । व-
यम् । प्रेति । जायामहै । इति । तम् । रुद्रेभ्यः । प्रे-
ति । अयच्छन् । तम् । षट् । अहानि । अबिभरुः ।

---

प्रायच्छत् । ते च त्रीण्यहान्यबिभरुः । चेत्यवधारणे । तेन यत् त्रयस्त्रिंशदधिकशतत्रयसंख्याः प्रजा असृजन्त तस्मात्त्र्यहं भार्य इति विध्यन्तरम् ॥

[7]तानित्यादिः षडहविधिः । तान्वसूनुद्रा अब्रुवन् । शेषं समानम् ॥

न्यबिभरुस्तेन त्रीणि च शतान्यसृंजन्त त्रयस्त्रिꣳशतं च तस्मात्षडहं भार्यः प्रैव जायते तानादित्या अब्रुवन्प्र यूयमजनिढ्वं वयम् ॥ १३ ॥ प्र जायामहा इति तमादित्येभ्यः प्रायच्छन्तं द्वादशाहान्यबिभरुस्तेन त्रीणि च शतान्यसृंजन्त त्रयस्त्रिꣳशतं च तस्माद्द्वादशाहं भार्यः प्रैव

तेन । त्रीणि । च । शतानि । असृंजन्त । त्रयस्त्रिꣳशतमिति त्रयः–त्रिꣳशतम् । च । तस्मात् । षडहमिति षट्–अहम् । भार्यः । प्रेति । एव । जायते । [8]तान् । आदित्याः । अब्रुवन् । प्रेति । यूयम् । अजनिढ्वम् । वयम् ॥ १३ ॥ प्रेति । जायामहै । इति । तम् । आदित्येभ्यः । प्रेति । अयच्छन् । तम् । द्वादश । अहानि । अबिभरुः । तेन । त्रीणि । च । शतानि । असृंजन्त । त्रयस्त्रिꣳशतमिति त्रयः–त्रिꣳशतम् । च । तस्मात् । द्वादशाहमिति द्वादश–अ-

[8]तानादित्या इत्यादिः द्वादशाहविधिः । तान् रुद्रानादित्या अब्रुवन् । समानमन्यत् ॥

जायते तेन वै ते सहस्रमसृजन्तो-
खाꣳ सहस्रतमीं य एवमुख्यꣳ सा-
हस्रं वेद प्र सहस्रं पशूनाप्नोति ॥ १४

हम् । भार्यः । प्रेति । एव । जायते । [9]तेन । वै ।
ते । सहस्रम् । असृजन्त । उखाम् । सहस्रतमी-
मिति सहस्र-तमीम् । यः । एवम् । उख्यम्
साहस्रम् । वेद । प्रेति । सहस्रम् । पशून् । आ-
प्नोति ॥ १४ ॥

अग्निवान्पशुमानसानीति वा अग्निर्धविष्ये
मृशेत्प्रजापतिस्त्वा सादयतु तया देवत-
याऽङ्गिरस्वद्ध्रुवा सीद तेन तानादि-
त्या अब्रुवन्प्र यूयमजनिढ्वं वयं
चत्वारिꣳशच्च ॥ २ ॥

---

[9]तेन वा इत्यादि ॥ तेनोख्येनाग्निना वस्वादयः सहस्रं प्रजा
असृजन्त एकोनाः । उखां तु तत्सहस्रतमीं तत्सहस्रपूरणीं असृजन्त
य एवमित्यादिः विदुषस्स्तुतिः । साहस्रं सहस्रयोगस्य निमित्तम्
' शतमानविंशतिक ' इत्यण् । एवं विद्वानपि सहस्रं पशूनप्रा-
प्नोति किं पुनः कर्तेति क्रियास्तुतिरेव वा ॥

इति पञ्चमे पञ्चमे द्वितीयोनुवाकः.

यजुषा वा एषा क्रियते यजुषा प-च्यते यजुषा वि मुच्यते यदुखा सा वा एषैतर्हि यातयाम्नी सा न पुनः प्रयुज्येत्याहुरग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमाꣳ इत्युखायां

[1]यजुषा । वै । एषा । क्रियते । यजुषा । प-च्यते । यजुषा । वीति । मुच्यते । यत् । उखा । सा । वै । एषा । एतर्हि । यातयाम्नीति यात-याम्नी । सा । न । पुनः । प्रयुज्येति प्र-युज्या । इति । आहुः । अग्ने । युक्ष्व । हि । ये । तव । युक्ष्व । हि । देवहूतमानिति देव-हूतमान् । इति । उखायाम् । जुहोति । तेन । एव । एनाम् । पुनः । प्रेति । युङ्क्ते । तेन । अयातयाम्नीत्ययात-याम्नी ।

[1]यजुषा वा इत्यादि ॥ उखानाम मन्त्रेण 'वि पाजसा'* इत्यादिना क्रियते । 'धिषणास्त्वा '† इत्यादिना पच्यते । 'मित्र '† इत्यादिना विमुच्यते । सेयमेतर्हि इदानीं उपधानकाले यातयाम्नी निर्गतरसा पुनर्मन्त्रोपयोगात् । 'अन उपधालोपिनः' इति ङीप् । न सा पुनरपि प्रयोज्या पुनरपि तां न प्रयोक्तुमर्हति । अयातयाम्नी चैवं भवति ॥

*सं. ४-१-५. †सं. ४-१-६.

जुहोति तेनैवैनां पुनः प्र युङ्क्ते तेना-
यातयाम्नी यो वा अग्निं योग आ-
गते युनक्ति युङ्क्ते युञ्जानेष्वग्ने॥१५॥
युक्ष्वा हि ये तव युक्ष्वा हि देवहू-
तमाꣳ इत्याहैष वा अग्नेर्योगस्तेनै-
वैनं युनक्ति युङ्क्ते युञ्जानेषु ब्रह्म वा-
दिनो वदन्ति न्यङ्ङग्निश्चेतव्या३

[2]यः। वै। अग्निम्। योगे। आगत इत्या-गते। युनक्ति। युङ्क्ते। युञ्जानेषु। अग्ने॥ १५॥ युक्ष्व। हि। ये। तव। युक्ष्व। हि। देवहूतमानिति देव-हूतमान्। इति। आह। एषः। वै। अग्नेः। योगः। तेन। एव। एनम्। युनक्ति। युङ्क्ते। युञ्जानेषु। [3]ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। न्यङ्। अग्निः। चेतव्या३ः। उत्ताना३

---

[2]यो वा इत्यादयो अग्नियोगकाले आगते युनक्ति स युञ्जानेषु आत्मानं युङ्क्ते योक्तृव्यपदेशं लभते। कर्त्रभिप्रायमात्मनेपदम् एते ऋचौ अग्नियोगसंज्ञे। अस्मिन्काले अब्रुवन् अग्निं युनक्ति युञ्जानेषु चात्मानं युङ्क्ते॥

[3]अथ उत्तानपुरुषशीर्षोपधानार्थं ब्रह्मचारिभिर्विचारं प्रस्तौति— ब्रह्मवादिन इति॥ ब्रह्मवादिनो विचारं वदन्ति, किं अधोमुखो-

उत्ताना३ इति वयसां वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चं चिनुयात्पृष्टित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुꣳ शक्नुयादसुवर्ग्योऽस्य स्यात्प्राचीनमुत्तानम् ॥१६॥

इत्युत्-ताना३ः । इति । वयसाम् । वै । एषः । प्रतिमयेति प्रति-मया । चीयते । यत् । अग्निः । यत् । न्यञ्चम् । चिनुयात् । पृष्टितः । एनम् । आहुतय इत्या-हुतयः । ऋच्छेयुः । यत् । उत्तानमित्युत्-तानम् । न । पतितुम् । शक्नुयात् । असुवर्ग्य इत्यसुवः-ग्यः । अस्य । स्यात् । [4]प्राचीनम् । उत्तानमित्युत्-तानम् ॥ १६ ॥ पुरुषशी-

---

ग्निश्चेतव्यः ? उत ऊर्ध्वमुखः ? इति । 'विचार्यमाणानाम्' इति प्लुतः । ....पक्षद्वयमिति । वयसामित्यादि । अयमग्निः पक्षिणां प्रतिमया प्रतिच्छन्देन चीयते, नेष्टकासङ्घातमात्रम् । विकृत्यर्थं बहुवचनम् । तत्र तत्तत्प्रतिमाम्नातं अग्निमयं चिनुयात् पृष्टितः पृष्टितयः एनमाहुतयः प्राप्नुयुः । यदुत्तानमिति । चिनुयादित्येव । चयनप्रातिकूल्यात् पतितुं न शक्नुयात् । ततश्चायं यजमानस्य असुवर्ग्यस्स्यात् । 'गोद्व्यचः' इति यत् ॥

[4]समाधत्ते—प्राचीनमित्यादि ॥ पुरुषशीर्षमात्रं प्राचीनमुत्तान-

पुरुषशीर्षमुपं दधाति मुखत एवै-
नमाहुंतय ऋच्छन्ति नोत्तानं चिंनुते
सुवर्ग्योंऽस्य भवति सौर्या जुंहोति
चक्षुंरेवास्मिन्प्रतिं दधाति द्विर्जुंहोति
द्वे हि चक्षुंषी समान्या जुंहोति

र्षमितिं पुरुष–शीर्षम् । उपेतिं । दधाति । मु-
खतः । एव । एनम् । आहुंतय इत्या–हुतयः ।
ऋच्छन्ति । न । उत्तानमित्युंत्–तानम् । चिनुते ।
सुवर्ग्यं इतिं सुवः–ग्यंः । अस्य । भवति । [5]सौर्या ।
जुहोति । चक्षुंः । एव । अस्मिन्न् । प्रतीतिं । द-
धाति । [6]द्विः । जुहोति । द्वे इतिं । हि । चक्षुंषी इ-

मुपदधाति । मुखत एवाहुतयः प्राप्नुवन्ति । आग्निं तु नोत्तानं
चिनुते न्यञ्चमेव च चिनुयात् । तेनायं स्वर्ग्यो भवति ॥

[5]सौर्येति ॥ ' चित्रं देवानां '* इति । ऋचा तस्मिन्पुरुषशिर-
जुहोति । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे ' उदात्तयणः
इति तृतीयाया उदात्तत्वम् ॥

[6]द्विरिति ॥ द्वित्वाच्चक्षुषः । समान्येति । एकयैवर्चा द्वयं
श्चक्षुषोः जुहोति । ' केवलमामक ' इति ङीप्, पूर्ववत्तृतीया-
उदात्तत्वम् । समानं एकमेव हि चक्षुरिन्द्रियं अधिष्ठानभेदा-

*सं. १-४-४३.

समानꣳ हि चक्षुस्समृद्ध्यै देवासु-
रास्संयत्ता आसन्ते वामं वसु सं
न्यदधत तद्देवा वामभृताऽवृञ्जत त-
द्वामभृतो वामभृत्त्वं यद्वामभृतमुप
दधाति वाममेव तया वसु यजमा-

ति । समान्या । जुहोति । समानम् । हि । चक्षुः ।
समृद्ध्या इति सं-ऋद्ध्यै । देवासुरा इति देव-
असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते ।
वामम् । वसु । सम् । नीति । अदधत । तत् । देवाः ।
वामभृतेति वाम-भृता । अवृञ्जत । तत् । वामभृत
इति वाम-भृतः । वामभृत्त्वमिति वामभृत्-त्वम् ।
यत् । वामभृतमिति वाम-भृतम् । उपदधातीत्यु-
प-दधाति । वामम् । एव । तया । वसु । यज-

---

भिन्नमिव लक्ष्यते । समृद्ध्या इति । अनुरूपत्वाय भवति ।
'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[7] देवासुरा इत्यादि ॥ असुराः वामं वननीयं चयनरसं न्यदधत गूढं क्वचित्संभूय स्थापितवन्तः । देवास्तु तद्वामभृन्नाम्न्या इष्टकया अवृञ्जत आददत । तत् वामं वसु भ्रियतेऽनयेति वामभृत् । करणे क्विप्, 'हृग्रहोर्भः' इति भत्वम् ॥

नो भ्रातृव्यस्य वृङ्क्ते हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै ॥ १७ ॥

मा नः । भ्रातृव्यस्य । वृङ्क्ते । [8]हिरण्यमूर्ध्नीति हिरण्य-मूर्ध्नी । भवति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । वामम् । ज्योतिषा । एव । अस्य । ज्योतिः । वामम् । वृङ्क्ते । द्वियजुरिति द्वि-यजुः । भवति । प्रतिष्ठित्या इति प्रति-स्थित्यै ॥ १७ ॥

युञ्जानेष्वग्ने प्राचीनमुत्तानं वामभृतं चतुर्विंशतिश्च ॥ ३ ॥

---

[8]हिरण्यमूर्ध्नीति ॥ हिरण्यं मूर्ध्नि उपरिभागे यस्याः । पूर्ववत् ङीप् । ज्योतिरिति । हिरण्यं द्योतनशीलं वामं वसु । तस्मात्तादृशेन तादृशं वा भ्रातृव्यस्याददते । द्वियजुरिति । द्वाभ्यां मन्त्राभ्यां 'याते अग्ने सूर्ये रुचः '* 'या वो देवाः सूर्ये रुचः '* इत्येताभ्यां यजुष्कृता वयजुष्कृति वा । त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । प्रतिष्ठित्या इति । द्वित्वलाभाद्गतेः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे पञ्चमे तृतीयोनुवाकः.

---

*सं. ४-२-९.

आपो वरुणस्य पत्नय आसन्ता
अग्निरभ्यध्यायत्ताःसमभवत्तस्य रे-
तः पराऽपतत्तदियमभवद्यद्द्वितीयं पु-
राऽपतत्तदसावभवदियं वै विराडसौ
स्वराड्यद्विराजावुपदधातीमे एवोपं

[1]आपः । वरुणस्य । पत्नयः । आसन् । ताः । अग्निः । अभीति । अध्यायत् । ताः । समिति । अभवत् । तस्य । रेतः । परेति । अपतत् । तत् । इयम् । अभवत् । यत् । द्वितीयम् । परापतदिति परा–अपतत् । तत् । असौ । अभवत् । इयम् । वै । विराडिति वि–राट् । असौ । स्वराडिति स्व–राट् । यत् । विराजाविति वि–राजौ । उपदधातीत्युप–दधाति । इमे इति । एव । उपेति । धत्ते ।

[1]उक्ताः 'विराट् ज्योतिरधारयत्'* इत्याद्यास्तिस्र इष्टकाः । आपो वरुणस्येत्यादिभिः विराट्स्वराजोस्स्तुतिः । अभ्यध्यायत् अकामयत समभवत् मिथुनभावेन अभुङ्क्त । तस्येत्यादि । गतम् । द्यावापृथिवीत्वेन विराट्स्वराजोरिष्टकयोस्स्तुतिः । तस्माद्विराजोपधानेन द्यावापृथिव्यावेव उपहिते । इमे इति । इयञ्चासौ च इमे । 'त्यदादीनां यत्परम्' इति इदमश्शेषः ॥

*सं. ४-२-९.

धत्ते यद्वा असौ रेतः सिञ्चति तद-
स्यां प्रति तिष्ठति तत्प्र जायते ता
ओषधयः ॥ १८ ॥ वीरुधो भवन्ति
ता अग्निरत्ति य एवं वेद प्रैव जा-
यतेऽन्नादो भवति यो रेतस्स्वी स्या-
त्प्रथमायां तस्य चित्यामुभे उप
दध्यादिमे एवास्मै समीची रेतस्सि-

[2]यत् । वै । असौ । रेतः । सिञ्चति । तत् । अ-
स्याम् । प्रतीति । तिष्ठति । तत् । प्रेति । जायते ।
ताः । ओषधयः ॥ १८ ॥ वीरुधः । भवन्ति । ताः ।
अग्निः । अत्ति । यः । एवम् । वेद । प्रेति । ए-
व । जायते । अन्नाद इत्यन्न–अदः । [3]भवति । यः ।
रेतस्स्वी । स्यात् । प्रथमायाम् । तस्य । चित्याम् ।
उभे इति । उपेति । दध्यात् । इमे इति । एव ।
अस्मै । समीची इति । रेतः । सिञ्चतः । यः ।

---

[2]यद्वा इत्यादि ॥ तत उदकं तत्पृथिव्यां प्रतिष्ठितं ओषध्यादिभावेन जायते ता अग्नेरदनीया भवन्तीति विराडुपधानेन अग्निरेव उपधा इति । य एवमिति । विदुषा विदित्वा वा कर्तव्यमिति ॥

[3]रेतस्स्वीति ॥ प्रजननसमर्थः । प्रजायत इत्येके । प्रभूतरेत इवेत्यन्ये । प्रथमायामित्यादि । गतम् । समीची इति । सं

अतो यस्मिन्त्सिक्तरेताः स्यात्प्रथमायां तस्य चित्यामन्यामुपं दध्यादुत्तमायामन्याꣳ रेतं एवास्यं सिक्तमाभ्यामुभयतः परिं गृह्णाति संवथ्सरं न कम् ॥ १९ ॥ चन प्रत्यवंरोहेन्न हीमे कं चन प्रत्यवरोहंतस्तदेनयोर्व्रतं

सिक्तरेता इतिं सिक्त-रेताः । स्यात् । प्रथमायाम् । तस्यं । चित्यांम् । अन्याम् । उपेतिं । दध्यात् । उत्तमायामित्युंत्-तमायांम् । अन्याम् । रेतंः । एव । अस्य । सिक्तम् । आभ्याम् । उभयतंः । परीतिं । गृह्णाति । [4]संवत्सरमितिं सं-वत्सरम् । न । कम् ॥ १९ ॥ चन । प्रत्यवंरोहेदितिं प्रति-अवरोहेत् । न । हि । इमे इतिं । कम् । चन । प्रत्यवरोहंत इतिं प्रति-अवरोहंतः । तत् । एन-

---

द्यावापृथिव्यौ सम्यग्वा रेतस्सेचयतः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । सिक्तरेता इति । बहुप्रजाः स्थविरो वा । आभ्यामिति । द्यावापृथिवीभ्यां उभयतःस्वसिक्तं रेतः प्रजारूपं परिगृह्णाति ॥

[4]संवत्सरमित्यादि ॥ न किञ्चिदपि प्रत्युत्तिष्ठेत् एते उपधाय । हेतुमाह—न हीति । द्यावापृथिव्यौ न कञ्चिदपि प्रत्युद्गच्छतः ।

यो वा अपंशीर्षाणम॒ग्निं चिनु॒तेऽ-
पंशीर्षा॒ऽमु॒ष्मिन्लो॒के भंवति॒ य-
स्सशीर्षाणं चिनु॒ते सशीर्षा॒ऽमु-
ष्मिन्लो॒के भंवति॒ चित्तिं जुहोमि॒
मनंसा घृ॒तेन॒ यथां दे॒वा इ॒हागमं-
न्वी॒तिहोंत्रा ऋ॒तावृधंस्समु॒द्रस्यं व॒-

यो॒ः । व्र॒तम् । [5]यः । वै । अपंशीर्षाण॒मित्यप-शीर्षाणम् । अ॒ग्निम् । चि॒नु॒ते । अपंशी॒र्षेत्यप-शीर्षा । अ॒मु॒ष्मिन्न् । लो॒के । भ॒व॒ति॒ । यः । सशीर्षाण॒मिति॒ स-शी॒र्षाण॒म् । चि॒नु॒ते । सशी॒र्षेति॒ स-शी॒र्षा । अ॒मु॒ष्मिन्न् । लो॒के । भ॒व॒ति [6]चित्ति॑म् । जु॒हो॒मि॒ । मनंसा । घृ॒तेनं । यथां । दे॒वाः । इ॒ह । आ॒ग॒म॒न्नित्यां-गमन्न् । वी॒तिहोंत्रा इति॑ वी॒ति-हो॒त्राः । ऋ॒ता॒वृ॒ध इत्यृ॒त-वृधः । स॒मु॒द्रस्य

तत्खल्वनयोर्व्रतं नियतं चेष्टितम् । तस्मात्तयोरुपधात्राऽपि तन्निमित्त युक्तं भवितुमिति भावः ॥

[5]यो वा इत्यादि ॥ स्वयमातृण्णामुपधाय तदवकाशे होमविधि 'शीर्षञ्छन्दसि' इति शिरसश्शीर्षन्भावः ॥

[6]'चित्तिं जुहोमि' इत्यादिना होमोग्नेश्शिरःप्राधान्यात् । न्त्रार्थस्तु—इयञ्चातिजगती पञ्चपदा । चित्तिं जुहोमि आददे

